॥ वराहमुखीस्तवः तथा वाराह्यनुग्रहाष्टकम् ॥

कुवलयनिभा कौशेयार्धोरुका मुकुटोज्ज्वला
हलमुसलिनी सद्भक्तेभ्यो वराभयदायिनी ।
कपिलनयना मध्ये क्षामा कठोरघनस्तनी
जयति जगतां मातः सा ते वराहमुखी तनुः ॥ १ ॥

तरति विपदो घोरा दूरात् परिह्रियते भय-
स्खलितमतिभिर्भूतप्रेतैः स्वयं व्रियते श्रिया ।
क्षपयति रिपूनीष्टे वाचां रणे लभते जयं
वशयति जगत् सर्वं वाराहि यस्त्वयि भक्तिमान् ॥ २ ॥

स्तिमितगतयः सीदद्वाचः परिच्युतहेतयः
क्षुभितहृदयाः सद्यो नश्यद्दृशो गलितौजसः ।
भयपरवशा भग्नोत्साहाः पराहतपौरुषा
भगवति पुरस्त्वद्भक्तानां भवन्ति विरोधिनः ॥ ३ ॥

किसलयमृदुर्हस्तः क्लिश्यते कन्दुकलीलया
भगवति महाभारः क्रीडासरोरुहमेव ते ।
तदपि मुसलं धत्से हस्ते हलं समयद्रुहां
हरसि च तदाघातैः प्राणानहो तव साहसम् ॥ ४ ॥

जननि नियतस्थाने त्वद्वामदक्षिणपार्श्वयो-
र्मृदुभुजलतामन्दोत्क्षेपप्रणर्तितचामरे ।
सततमुदिते गुह्याचारद्रुहां रुधिरासवै-
रुपशमयतां शत्रून् सर्वानुभे मम देवते ॥ ५ ॥

हरतु दुरितं क्षेत्राधीशः स्वशासनविद्विषां
रुधिरमदिरामत्तः प्राणोपहारबलिप्रियः ।
अविरतचटत्कुर्वद्दंष्ट्रास्थिकोटिरटन्मुको
भगवति स ते चण्डोच्चण्डः सदा पुरतः स्थितः ॥ ६ ॥

क्षुभितमकरैर्वीचीहस्तोपरुद्धपरस्परै-
श्चतुरदधिभिः क्रान्ता कल्पान्तदुर्ललितोदकैः ।
जननि कथमुत्तिष्ठेत् पातालसद्मबिलादिला
तव तु कुटिले दंष्ट्राकोटी न चेदवलम्बनम् ॥ ७ ॥

तमसि बहुले शून्याटव्यां पिशाचनिशाचर-

प्रमथकलहे चोरव्याघ्रोरगद्विपसंकटे ।
क्षुभितमनसः क्षुद्रस्यैकाकिनोऽपि कुतो भयं
सकृदपि मुखे मातस्त्वन्नाम संनिहितं यदि ॥ ८ ॥

विदितविभवं हृद्यैः पद्यैर्वराहमुखीस्तवं
सकलफलदं पूर्णं मन्त्राक्षरैरिममेव यः ।
पठति स पटुः प्राप्नोत्यायुश्चिरं कवितां प्रियां
सुतसुखधनारोग्यं कीर्तिं श्रियं जयमुर्वराम् ॥ ९ ॥

इति श्रीवराहमुखीस्तवः समाप्तः ॥